( प्रवरमन्त्रस्य निगदस्य स्रुगादापननिगदस्य च व्याख्यानम् )

घृतवतीशब्दे जुहूपभृतावादायेत्याध्वर्यवसूत्रे दर्शितवान् । होता तु घृतवती-मध्वर्यो: स्रुचमास्यस्वेत्यनेन शब्देन युक्तमनुवाकं पठति । तदिदं स्रुचोरादापनम् । सोऽयमनुवाको मन्त्रकाण्डे समाम्नातः । तस्य पाठस्तु—

" अग्निर्होता वेत्त्वग्निः । होत्रं वेत्तु प्रावित्रम् । स्मो वयम् । साधु ते यज-मान देवता । घृतवतीमध्वर्यो स्रुचमास्यस्व । देवायुवं विश्ववाराम् । ईडामहै देवाꣳ ईडेन्यान् । नमस्याम नमस्यान् । यजाम यज्ञियान् " ( ब्रा० का० ३ प्र० ५ अ० ४ ) इति ।

अयमग्निर्होता होमस्य कर्ता । तथा चान्यत्र मन्त्रब्राह्मण आम्नातम्—" अग्ने यष्टरिदं नम इत्याह । अग्निर्वै देवानां यष्टा " इति । अतोऽयमग्नि-र्वेत्तु होमकर्म जानातु । तदेव वेदनमुत्तरवाक्येन ( ण ) स्पष्टी क्रियते प्रकृष्टम-वित्रं फलदानरूपमस्मद्रक्षणं यस्मिन्होमानुष्ठाने तदिदं प्रावित्रम् । तादृशं होत्रं होमानुष्ठानं वेत्तु होमकर्म जानातु । न केवलं दैव्यस्य होतुरग्नेरुपरि भारः प्रक्षि-प्यते किंतु वयं स्मो मनुष्यहोतारो वयमप्यत्र वर्तामहे । अतो वयमपि होमकर्म-ज्ञानवन्तस्तिष्ठामः । हे यजमान ते तव हविःस्वीकर्त्री देवता साधु फलं ददात्विति शेषः । हेऽध्वर्यो घृतपूर्णां स्रुचं जुहूमास्यस्वाऽऽक्षिप स्वी कुर्वित्यर्थः । कीदृशीं स्रुचं, देवायुवं देवान्यौति मिश्रयतीति देवायुस्तादृशीम् । विश्ववारां विश्वान्सर्वान् राक्षसकृतान्विघ्नान्वारयतीति विश्ववारा तादृशीम् । ईडेन्यान्स्तुतिप्रियान्मनुष्यान्वयं स्तुमः । नमस्यान्नमस्कारप्रियान्पितॄन्नमस्कुर्मः । यज्ञियान्यज्ञप्रियान्देवान्यजाम ।

अग्नेर्होतृत्वं वेदेषु प्रसिद्धमित्येतद्दर्शयति—

अग्निर्होतेति । दैव्यस्य होतुः साहाय्यमाचरितुं मानुषस्य स्वस्य सद्भाव इत्येतद्दर्शयति—

स्मो वयमिति । ददात्वित्येतादृशेनाऽऽशीरर्थेन वाक्यपूरणाय तात्पर्यार्थं दर्शयति—

साधु त इति । शाखान्तरे साधु ते यजमान देवतेत्यस्योपरि योऽग्निं होतारमवृथा इति किंचिद्वाक्यमाम्नातम् । तस्यायमर्थः—हे यजमान यस्त्वमग्निं होतारमवृथा होतृत्वेन वृतवानसि तस्य तव साधु ददात्विति ।

तमिमं शाखान्तरपाठं दूषयति–

**यद्ब्रूयादिति ।** अग्निर्होता वेत्त्वग्निरित्युपक्रमे पठितं साधु ते यजमान देवतेत्यस्मादप्यूर्ध्वं यद्याग्निः होतारमिति ब्रूयात्तदोभयोः पार्श्वयोर्यजमानोऽग्निना परिगृहीतो भवेत् । ततो दाहाधिक्येन म्रियेत । तस्माच्छाखान्तरपाठो नाऽऽदर्तव्यः ।

यद्यपि जुहूपभृतौ द्वे अपि आदातव्ये तथाऽपि तयोः समं प्राधान्यं निवार्य जुह्वा एव प्राधान्यं द्योतयितुं स्रुचमित्येकवचनमेव पठनीयमित्येतद्दर्शयति--

**यजमानदेवत्येति ।** स्रुचावित्येव द्विवचनेन द्वे इव द्वे अपि समप्रधाने इव यदि ब्रूयात्तदा यजमानसमानं भ्रातृव्यमुत्पादयेत् । तस्मादुपभृतमुपेक्षितामिव तिरस्कर्तुं जुहूप्राधान्यायैकवचनाभिधानेन यजमानं वर्धितवान्भवति । नहि जुह्वा इवोपभृतः क्वचिदपि साक्षाद्धोमसाधनत्वमस्ति । तस्मादुपसर्जनत्वं तस्या युक्तम् ।

देवमिश्रेण देवरक्षणं विघ्ननिवारणेन विश्वरक्षणमभिप्रेतमित्येतद्दर्शयति–

**देवायुवमिति ।** ईडेन्यादिशब्दैर्विवक्षितं दर्शयति -

**ईडामहा इति ।** देवता यजतीत्येदुपलक्षणम् । मनुष्यान्स्तौति पितॄन्नमस्यतीत्येतदपि द्रष्टव्यम् । एवं च सति यस्य मनुष्यादेर्यो भागः स्तुत्यादिरूप उपचरितस्तं भागमनतिक्रम्यानुष्ठितवान्भवति ।

अत्र मीमांसा ।

दशमाध्यायस्य चतुर्थपादे चिन्तितम्–

" चातुर्मास्यातिदिष्टेषु निगमेष्वाज्यपानिति ।
विक्रियेत न वाऽऽद्येऽपि किं स्याद्दध्याज्यपानिति ॥

दधिपानिति वा यद्वेत्येवं स्यात्पृषदाज्यपान् ।
द्रव्यद्वयोक्तेराद्यः स्याद्दधिमात्रहविष्ट्वतः ॥
द्वितीयः स्यात्तृतीयोऽस्तु द्रव्यान्तरविधानतः ।
गुणो दध्ना चित्रताऽऽज्ये ततो विक्रियते नहि ॥

( काम्यसामिधेनीनैमित्तिकसाधिनेमीनामभिधानम् )

चातुर्मास्येषु चोदकेनाऽऽवाहनस्वाहाकारायाड्जोषणनिगमा अतिदिष्टाः । तत्राऽऽज्यपशब्दः प्रयुक्तः–" देवाꣳ आज्यपाꣳ आवह " । " स्वाहा देवाꣳ आज्यपान् " । " अयाड्देवानामाज्यपानां प्रिया धामानि " । " देवा आज्यपा आज्यमजुषन्त " इति । सोऽयमाज्यपशब्दो विक्रियते न वेति संशयः । तत्र विकारोऽपि त्रिविधः । तत्र दध्याज्यपानित्याद्यस्तावत्प्राप्नोति । कुतः । अथ पृषदाज्यं गृह्णाति. द्वयं वा इदं सर्पिश्च दधि चेति द्रव्यद्वयस्योक्तत्वात् । आज्यस्योपस्तरणाभिघारणार्थत्वेन हविःशेषत्वाद्धविष्ट्वं नास्तीति दध्येव हविः । ततो दधिपानिति द्वितीयः पक्षः । दध्याज्यमेलनेन निष्पद्यते पृषदाज्यं द्रव्यान्तरम् । तदेव हविरिति पृषदाज्यपानिति तृतीयः पक्षः । दधिमेलनादाज्ये पृषत्ता गुणो निष्पद्यते । तस्मादाज्यस्यैव हविष्ट्वमित्याज्यपशब्दोपेता एव निगमाः पठितव्याः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ द्वितीयाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ) ।

त्रीꣳ स्तृचाननु ब्रूयाद्राजन्यस्य त्रयो वा
अन्ये राजन्यात्पुरुषा ब्राह्मणो वैश्यः शूद्र-
स्तानेवास्मा अनुकान्करोति पञ्चदशाननु ब्रू-
याद्राजन्यस्य पञ्चदशो वै राजन्यः स्व एवै-
नꣳ स्तोमे प्रति ष्ठापयति त्रिष्टुभा परि द-
ध्यादिन्द्रियं वै त्रिष्टुगिन्द्रियकामः खलु वै

राजन्यो यजते त्रिष्टुभैवास्मा इन्द्रियं परि गृह्णाति यदि कामयेत ( १ ) ब्रह्मवर्चसमस्त्विति गायत्रिया परि दध्याद्ब्रह्मवर्चसं वै गायत्री ब्रह्मवर्चसमेव भवति सप्तदशानु ब्रूयाद्वैश्यस्य सप्तदशो वै वैश्यः स्व एवैनꣳ स्तोमे प्रति ष्ठापयति जगत्या परि दध्याज्जागता वै पशवः पशुकामः खलु वै वैश्यो यजते जगत्यैवास्मै पशून्परि गृह्णात्येकविꣳशतिमनु ब्रूयात्प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै [ २ ] चतुर्विꣳशतिमनु ब्रूयाद्ब्रह्मवर्चसकामस्य चतुर्विꣳशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैवास्मै ब्रह्मवर्चसमव रुन्धे त्रिꣳशतमनु ब्रूयादन्नकामस्य त्रिꣳशदक्षरा विराडन्नं विराड्विराजैवास्मा अन्नाद्यमव रुन्धे द्वात्रिꣳशतमनु ब्रूयात्प्रतिष्ठाकामस्य द्वात्रिꣳशदक्षराऽनुष्टुगनुष्टुप्छन्दसां प्रतिष्ठा प्रतिष्ठित्यै षट्त्रिꣳशतमनु ब्रूयात्पशुकामस्य षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशून् ( ३ ) अव रुन्धे

[ अभ्युदयेष्ट्यादीष्टित्रयविधिः ]

चतुश्चत्वारिꣳ शतमनु ब्रूयादिन्द्रियकाम-
स्य चतुश्चत्वारिꣳ शदक्षरा त्रिष्टुगिन्द्रियं
त्रिष्टुप्त्रिष्टुभैवास्मा इन्द्रियमव रुन्धेऽष्टा-
चत्वारिꣳ शतमनु ब्रूयात्पशुकामस्याष्टाच-
त्वारिꣳ शदक्षरा जगती जागताः पशवो
जगत्यैवास्मै पशूनव रुन्धे सर्वाणि छन्दाꣳ
स्यनु ब्रूयाद्बहुयाजिनः सर्वाणि वा एतस्य
छन्दाꣳ स्यवरुद्धानि यो बहुयाज्यपरिमितमनु
ब्रूयादपरिमितस्यावरुद्ध्यै [ ४ ] ॥

( कामयेत प्रतिष्ठित्यै पशून्त्सप्तचत्वारिꣳ शच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ द्वितीयाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ) ।

व्याख्याता नवमे स्पष्टं प्रवरा निगदादयः ।

अथ दशमे नैमित्तिक्यः काम्याश्च सामिधेन्य उच्यन्ते ।

तत्र राजन्यं निमित्तीकृत्य विधत्ते–

त्रीꣳ स्तृचानिति । प्र वो वाजा इत्येका त्रिरावृत्तत्वात् ( त्ता ) । अग्न आयाहीत्येकस्तृचः । त्वं वरुण इत्येका परिधानीया त्रिरावृत्ता । एवं त्रयस्तृचाः । तेन तृचानां त्रित्वेन राजन्यव्यतिरिक्तान्ब्राह्मणादींस्त्रीन्वर्णान्राजन्यस्यानुकूलान्करोति ।

पक्षान्तरं विधत्ते -

**पञ्चदशानु ब्रूयादिति** । प्रजापतेरुरसो बाहुभ्यां च पञ्चदशस्तोमस्य राजन्यस्य चोत्पन्नत्वादसौ स्तोमो राजन्यस्य स्वकीयः । यद्यपि पञ्चदश सामिधेनीरन्वाहेति वर्णत्रयसाधारणवचनेनैवायं पक्षः प्राप्तस्तथाऽपि त्रीꣳस्तृचानित्यनेन विशेषवचनेन नित्यबाधप्राप्तौ विकल्पार्थं पञ्चदशेति प्रतिप्रसवो विधीयते ।

त्वं वरुण इत्येतां परिधानीयां विधत्ते—

**त्रिष्टुभा परीति** । त्रिष्टुभ इन्द्रेण सहोत्पन्नत्वात्तत्संबन्धीन्द्रियरूपत्वम् । राजन्यस्य युयुत्सुत्वादिन्द्रियसामर्थ्यकामः ।

राजन्यस्य नित्यां परिधानीयां विधाय काम्यां विधत्ते-

**यदि कामयेतेति** । आजुहोत दुवस्यतेत्येषा गायत्री । तत्सवितुरित्यस्या गायत्र्या उपदेशेन ब्रह्मवर्चसनिष्पत्तेस्तस्य गायत्रीरूपत्वम् ।

वैश्यं निमित्तीकृत्य विधत्ते -

**सप्तदशानु ब्रूयादिति** । "समिध्यमानो अध्वरे" "समिद्धो अग्न आहुत" इत्यनयोर्मध्ये "पृथुपाजा मर्त्यः" "तꣳ सबाधो यतस्रुचः" इत्येतयोर्धाय्ययोः प्रक्षेपेण सप्तदशसंख्यानिष्पत्तिः । प्रजापतेर्मध्यदेशात्सप्तदशस्तोमवैश्ययोरुत्पन्नत्वात्सप्तदशस्तोमस्तदीयः ।

वैश्यस्य समिध्यमानो अमृतस्य राजसीत्येतां परिधानीयां विधत्ते-

**जगत्या परीति** । जगत्यनुष्ठानलब्धत्वात्पशूनां जागतत्वम् । वैश्यस्य क्षीरदध्यादिविक्रयाय पशुकामत्वं प्रसिद्धम् । नैमित्तिकीं विधाय काम्यां विधत्ते -

**एकविꣳशतिमिति** ।

अत्र संख्यापूरणं संप्रदायविद्भिरेवमुक्तम् -एकविंशत्यादिषु प्रथमाया उत्तरे द्वे ईडे अग्निमित्यादिके । अथाग्न आयाहीत्यादि । अथ त्वामग्ने पुष्करादधीति त्रयस्तृचाः । अग्निमग्निमित्येकादश । पृथुपाजा इत्यष्टौ । अष्टाचत्वारिंशत्यक्षरस्य दाशतय्यास्विम्म आगमयितव्याः । एकविंशत्यादिषु कार्येषु एतासां यथार्थ-

[ काम्यसामिधेनीनैमित्तिकसामिधेनीनामाभिधानम् ]

मागम इति । अस्यायमर्थः--यदा सामिधेनीबुद्धिरपेक्षिता तदाऽऽम्नातायाः प्र वो वाजा इत्यस्या उपरीडे अग्निमित्यादिकं द्वयं प्रक्षेपणीयम् । तत ऊर्ध्वमग्न आयाहीत्यादिकं यथाम्नातं पठितम् । तत्र समिध्यमानसमिद्धवत्योर्मध्ये त्वामग्न इत्यादिका उदाहृताः प्रक्षेपणीयाः । यावतीनां प्रक्षेपेण संख्या पूर्यते तत्प्रमाणवतीनां प्रक्षेप इति । मीमांसकास्तु * धाय्यासंज्ञकानामेव समिध्यमानसमिद्धवत्योर्मध्ये प्रक्षेपः । इतरासां त्वन्ते प्रक्षेपमाहुः । तत्रापि परिधानीयाया उत्तमायाः प्रागेवेत्ययं विशेषो द्रष्टव्यः । त्रिवृत्पञ्चदशसप्तदशानां संख्या चतुर्थ एकविंशस्तोमेऽन्तर्भूतेति स स्तोम इतरेषां स्तोमानां प्रतिष्ठा । फलान्तराय विधत्ते--

चतुर्विꣳशतिमिति । पुनरपि फलान्तराय विधत्ते—

त्रिꣳशतमिति । दशाक्षरैस्त्रिभिः पादैर्विराजस्त्रिंशदक्षरत्वम् । तच्छन्दोनुष्ठानेनान्नस्य लभ्यत्वात्तस्य च्छन्दसोऽन्नत्वम् । पुनः फलान्तराय विधत्ते—

द्वात्रिꣳशतमिति । अन्यत्र वाग्वा अनुष्टुगिति श्रवणाद्वाग्रूपत्वमनुष्टुभः । वाचि सर्वेषां छन्दसामन्तर्भावादनुष्टुबितरच्छन्दसां प्रतिष्ठा ।

पुनः फलान्तराय विधत्ते—

षट्त्रिꣳशतमिति । पशूनां बृहतीच्छन्दसोऽनुष्ठानेन लभ्यत्वात्तदाहृतत्वम् । फलान्तराय विधत्ते—

चतुश्चत्वारिꣳशतमिति । पुनः फलान्तराय विधत्ते—

अष्टाचत्वारिꣳशतमिति । सोमयाजिनमधिकृत्य विधत्ते—

सर्वाणि छन्दाꣳसीति । बहुभिर्दाक्षिणायादिभिरिष्टिभिरग्नीषोमीयादिपशुभिरैन्द्रवायवादिग्रहैश्च यजत इति बहुयाजी । एतस्य बहुयाजिनः सवनत्रये गायत्र्युष्णिगनुष्टुब्जगतीरूपाणि सर्वाणि च्छन्दांस्यवरुद्धानि भवन्ति । तस्मात्सोमयाजी यदा दर्शपूर्णमासावनुतिष्ठति तदा तस्य त्रीणि च्छन्दांस्यनुब्रूयात् ।

---

* अत्र ख. पुस्तके याज्यासंज्ञकानामिति पाठान्तरम् ।

'समिध्यमानः प्रथमोऽनुधर्मः' इत्येषा त्रिष्टुप् । 'त्वामग्ने प्र दिव आहुतं घृतेन' इत्येषा जगती । एतदुभयं समिद्धवत्याः पूर्वं पठनीयम् ।

तस्य सोमयाजिनस्त्रीꣳस्तृचानित्यनुवाकेऽष्टाचत्वारिꣳशतमनुब्रूयादित्यन्तेयः संख्याविशेषस्तत्र स्वेच्छैव नियामिका, न तु वाचनिको नियमोऽस्तीत्येतद्विधत्ते ·

अपरिमितामिति । अपरिमितस्याधिकस्य फलस्येत्यर्थः ।

अत्र मीमांसा ।

तृतीयाध्यायस्य षष्ठपादे चिन्तितम्—

"सामिधेनीः सप्तदश प्रकृतौ विकृतावुत ।
पूर्ववत्प्रकृतौ पाञ्चदश्येनैतद्विकल्पते ॥
विकृतौ साप्तदश्यं स्यात्प्रकृतौ प्रक्रियाबलात् ।
पाञ्चदश्यावरुद्धत्वादाकाङ्क्षाया निवृत्तितः" ॥

अनारभ्य श्रूयते -'सप्तदश सामिधेनीरनुब्रूयात्' इति । प्र वो वाजा अभिद्यव इत्याद्या अग्निसमिन्धनार्था ऋचः सामिधेन्यः । तासां साप्तदश्यं पूर्वन्यायेन प्रकृतिगतम् । यदि प्रकृतौ पञ्चदश सामिधेनीरन्वाहेति विधिः स्यात्तर्हि पाञ्चदश्यं साप्तदश्यं च विकल्पेयातामिति प्राप्ते ब्रूमः--विकृतावेव साप्तदश्यं निविशते । प्रकृतौ पाञ्चदश्येनावरुद्धानां सामिधेनीनां संख्याकाङ्क्षाया अभावात् । न च पाञ्चदश्यसाप्तदश्ययोः समानबलत्वादवरोधाभाव इति शङ्कनीयम् । पाञ्चदश्ये प्रकरणानुग्रहस्याधिकत्वात् । तस्मान्मित्रविन्दाध्वरकल्पादिविकृतौ साप्तदश्यमवतिष्ठते । न चात्र पूर्वन्यायोऽस्ति । साप्तदश्यस्य चोदकप्राप्त्यभावेन पुनर्विधानदोषाभावात् ।

तत्रैवान्यच्चिन्तितम्--

"साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत ।
पूर्ववच्चेन्न संकोचान्नित्ये नैमित्तिकोक्तितः ॥

[ काम्यसामिधेनीनैमित्तिकसामिधेनीनामभिधानम् ]

गोदोहनेन प्रणयेत्कामीत्येतदुदाहरत् ।
भाष्यकारस्तदप्यस्तु न्यायस्यात्र समत्वतः " ॥

सप्तदशानुब्रूयाद्वैश्यस्येति विहितं वैश्यनिमित्तं साप्तदश्यं पूर्वन्यायेन विकृतिगामीति चेन्मैवम् । नैमित्तिकेनानेन वचनेन प्रकृतिगतस्य नित्यस्य पाञ्चदश्यस्य वैश्यव्यतिरिक्तविषयतया संकोचनीयत्वात् । नित्यं सामान्यरूपतया सावकाशत्वेन च दुर्बलं, नैमित्तिकं तु विशेषरूपत्वनिरवकाशत्वाभ्यां प्रबलम् । तस्माद्वैश्यनिमित्तकं साप्तदश्यं प्रकृतावववतिष्ठते । अत्र भाष्यकारोऽन्यदुदाजहार--' चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य ' इति । तत्र प्रकृतेश्चमसेनावरुद्धत्वाद्गोदोहनं विकृताविति पूर्वः पक्षः । कामनानिमित्तकेन गोदोहनेन नित्यस्य चमसस्य निष्कामविषयतया संकोचनीयत्वात्प्रकृतावेव गोदोहनमिति सिद्धान्तः । दशमाध्यायस्याष्टमपादे चिन्तितम्--

" सामिधेनीसाप्तदश्यं वैमृधादावपूर्वगीः ।
संहृतिर्वोपकारस्य क्लृप्त्याऽऽस्योऽस्त्वाज्यभागवत् ।
सामिधेन्यश्चोदकाप्ताः साप्तदश्यं तु वैमृधे ।
पुनर्वाक्येन संहार्यमनारभ्योक्तिचोदितम् " ॥

अनारभ्य किंचिदाम्नायते--" सप्तदश सामिधेनीरनुब्रूयात् " इति । तथा वैमृधेऽध्वरकल्पायां पशौ मित्रविन्दायामाग्रयणेष्ट्यादौ च पुनः साप्तदश्यं विहितम् । यद्यप्यनारभ्याधीतानां प्रकृतिगामित्वं न्याय्यं तथाऽपि श्रुतेन पाञ्चदश्येनावरुद्धत्वाद्विकृतिष्वेतन्निविशते । तथा सति वैमृधादिविकृतिष्वनारभ्यवादप्राप्ताः सप्तदश सामिधेन्यः प्राकरणिकेन विधिना पुनर्विधीयमाना गृहमेधीयाज्यभागवत्क्लृप्तोपकारकत्वेनेतिकर्तव्यताकाङ्क्षां पूरयन्त्यश्चोदकं लोपयन्त्यो वैमृधादेरपूर्वकर्मतां गमयन्ति । साप्तदश्यं त्वनारभ्यवादप्राप्तमनूद्यत इति प्राप्ते ब्रूमः-- वैमृधादिषु सामिधेन्य आज्यभागवन्न विधीयन्ते, किंतु चोदकप्रा-

प्तास्ता अनूद्य साप्तदश्यं विधीयते । तत्र साप्तदश्यं वैमृधादिप्रकरणेष्वाम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तम् । अनारभ्यवादेन तु सर्वासु विकृतिषु । तत्रानारभ्यवादो विलम्बते । प्रथमं विधेयस्य साप्तदश्यस्य सामिधेनीसंबन्धमवबोध्य तत्संबन्धान्यथानुपपत्त्या क्रतुसंबन्धं परिकल्प्य प्रकृतौ पाञ्चदश्यपराहतत्वेन विकृतिषु सर्वासु प्रवेशः क्रियत इति विलम्बः । प्राकरणिकैर्विधिभिः सामिधेनीसंबन्ध एव बोधनीयः । क्रतौ तद्विशेषे च प्रवेशो न बोधनीयः । प्रत्यक्षप्रकरणेनैव तत्सिद्धेः । तत्र साप्तदश्यस्य वैमृधादिविकृतिविशेषसंबन्धे सहसा प्रतिपन्ने सति तद्विरोधी विकृतिसंबन्धो न कल्पयितुं शक्यः । अनारभ्यवादस्तु वैमृधादिषु प्राप्तस्य नित्यानुवादोऽस्तु यद्वा प्रकरणविधिर्वैमृधादिषु साप्तदश्यस्य प्रापकः । अनारभ्यवादस्तु चोदकप्राप्तस्य पाञ्चदश्यस्य बाधकः । सर्वथाऽपि चतुर्धाकरणवदुपसंहारो न त्वाज्यभागवदपूर्वं कर्म । तत्रैव पञ्चमपादे चिन्तितम्—

"सामिधेनीविवृद्धौ किमागमोऽभ्यस्यतामुत ।
आगमः पूर्ववन्नैवमभ्यासप्रकृतित्वतः ॥
तत्राप्याद्यन्तयोर्यावत्पूर्त्यभ्यासो यथोक्ति वा ।
अभ्यस्याऽऽगमतः पूर्तिः पूरणार्थत्वतोऽग्रिमः ॥
त्रित्वं न पूरणायोक्तमन्यथाऽप्यत्र पूरणात् ।
विवक्षितमबाधित्वा भवेत्पूरणमागमात् " ॥

दर्शपूर्णमासयोः पञ्चदश सामिधेनीर्विधाय काम्या तद्वृद्धिर्विधीयते—"एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य" इत्यादिना । यथा बहिष्पवमान ऋगागमस्तथाऽत्रापीति प्राप्ते ब्रूमः -एकादशाभिः पठिताभिः पञ्चदशसंख्याया अपूर्वा वृगन्तरागमनेन तत्पूरणं न कृतं, किंतु तत्पूरणायाभ्यासो विहितः—" त्रिः

[ सामिधेनीषु होतृनियमविशेषाध्वर्युधाराविशेषयोरभिधानम् ]

प्रथमामन्वाह त्रिरुत्तमाम् " इति । अतः काम्यानामभ्यासेन पूरणं युक्तम् । अभ्यासपक्षेऽपि यावत्कृत्वोऽभ्यासे सत्येकविंशतिसंख्या पूर्यते तावत्कृत्वः प्रथमोत्तमे अभ्यसनीये । कुतः । विहितस्य त्रिरभ्यासस्य पूरणार्थत्वदर्शनात् । मैवम् । न हि त्रित्वं पूरणार्थं विहितम् । प्रथमाया द्विरभ्यासेनोत्तमायाश्चतुरभ्यासेन पञ्चदशसंख्यापुरणात् । अतो विवक्षितं त्रित्वम् । तथा सति तदेवाधाय प्रथमोत्तमे त्रिरभ्यस्य षण्णामृचामागमेनैकविंशसंख्या पूरणीया ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ द्वितीयकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः । )

निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुप व्ययते देवलक्ष्ममेव तत्कुरुते तिष्ठन्नन्वाह तिष्ठन्ह्याश्रुततरं वदति तिष्ठन्नन्वाह सुवर्गस्य लोकस्याभिजित्या आसीनो यजत्यस्मिन्नेव लोके प्रति तिष्ठति यत्क्रौञ्चमन्वाहाऽऽसुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत्सदेवमन्तरानूच्यꣳ सदेवत्वाय विद्वाꣳसो वै ( १ ) पुरा होतारोऽभूवन्तस्माद्विधृता अध्वानोऽभूवन्न पन्थानः सम

रुक्षन्नन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्योऽ-
थान्वाहाध्वनां विधृत्यै पथामसꣳरोहायाथो
भूतं चैव भविष्यच्चाव रुन्धेऽथो परिमितं
चैवापरिमितं चाव रुन्द्धेऽथो ग्राम्याꣳश्चैव
पशूनारण्याꣳश्चाव रुन्धेऽथो [ २ ] देव
लोकं चैव मनुष्यलोकं चाभि जयति देवा
वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्र-
जापतिस्तूष्णीमाघारमाऽऽघारयत्ततो वै देवा
यज्ञमन्वपश्यन्यत्तूष्णीमाघारमाघारयति यज्ञ-
स्यानुख्यात्या अथो सामिधेनीरेवाभ्यन-
क्त्यलूक्षो भवति य एवं वेदाथो तर्पयत्येवै-
नास्तृप्यति प्रजया पशुभिः [ ३ ] य एवं
वेद यदेकयाऽऽघारयेदेकां प्रीणीयाद्यद्द्वा-
भ्यां द्वे प्रीणीयाद्यत्तिसृभिरति तद्रेचयेन्मन-
साऽऽघारयति मनसा ह्यनाप्तमाप्यते ति
र्यञ्चमाघारयत्यच्छम्बट्कारं वाक्च मन-
श्चाऽऽर्तीयेतामहं देवेभ्यो हव्यं वहामीति
वागब्रवीदहं देवेभ्य इति मनस्तौ प्रजापतिं
प्रश्नमैताꣳ सोऽब्रवीत् [ ४ ] प्रजापतिर्दूती
रेव त्वं मनसोऽसि यद्धि मनसा ध्यायति
तद्वाचा वदतीति तत्खलु तुभ्यं न वाचा

जुहवान्नित्यब्रवीत्तस्मान्मनसा प्रजापतये जुह्वति मन एव हि प्रजापतिः प्रजापतेराप्त्यै परिधीन्त्सं मार्ष्टि पुनात्येवैना न्त्रिर्मध्यमं त्रयो वै प्राणाः प्राणानेवाभि जयति त्रिर्दक्षिणार्ध्यं त्रयः [ ५ ] इमे लोका इमानेव लोकानभि जयति त्रिरुत्तरार्ध्यं त्रयो वै देवयानाः पन्थानस्तानेवाभि जयति त्रिरुप वाजयति त्रयो वै देवलोका देवलोकानेवाभि जयति द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्या आघारमा घारयति तिर इव [ ६ ] वै सुवर्गो लोकः सुवर्गमेवास्मै लोकं प्र रोचयत्यृजुमा घारयत्यृजुरिव हि प्राणः संततमा घारयति प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याऽऽघारयेत्प्राणमेवास्माज्जिह्मं नयति ताजक्प्र मीयते शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवा [ ७ ] आघारमाघार्यं ध्रुवाꣳ समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधात्यग्निर्देवानां दूत आसीद्दैव्योऽसुराणां तौ प्रजा-

( सामिधेनीषु होतृनियमविशेषाध्वर्य्वाघारविशेषयोरभिधानम् )

पति प्रश्नमैताꣳ स प्रजापतिर्ब्राह्मणमब्रवीदे-
तद्वि ब्रूहीत्या श्रावयेतीदं देवाः शृणुतेति
वाव तदब्रवीदग्निर्देवो होतेति य एव देवानां
तमवृणीत ततो देवाः ( ८ ) अभवन्पराऽ-
सुरा यस्यैवं विदुषः प्रवरं प्रवृणते भवत्या-
त्मना पराऽस्य भ्रातृव्यो भवति यद्ब्राह्म-
णश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि
ब्रूयाद्यद्ब्राह्मणायाध्याहाऽऽत्मनेऽध्याह य-
द्ब्राह्मणं पराहाऽऽत्मानं पराऽऽह तस्माद्ब्रा-
ह्मणो न परोच्यः ( ९ ) ॥

( वा आरण्याꣳश्चाव रुन्धेऽथो पशुभिः सोऽब्रवीद्दक्षिणाध्यर्धं त्रयं
इव ध्रुवा देवाश्चत्वारिꣳशच्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
पञ्चमप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

—

( सामिधेनीषु होतृनियमविशेषाध्वर्य्वाघारविशेषयोरभिधानम् )

( अथ द्वितीयकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः ) ।

नैमित्तिक्यः सामिधेन्यः काम्याश्च दशमे श्रुताः ।

अथैकादशे सामिधेनीषु होतुर्नियमविशेषोऽध्वर्योराघारविशेषश्चाभिधीयते । तत्राऽऽदौ तावद्यागकर्तॄणामुपवीतं विधातुं प्रस्तौति—

निवीतमिति । यत्रोभावपि बाहू न्यग्भूतौ सन्तौ ब्रह्मसूत्रेण वस्त्रेण वा धीयेते संवृतावाच्छादितौ क्रियेते तन्निवीतम् तच्च मनुष्याणां कार्येषु प्रशस्तम् । तस्माद्दृषितपर्णं निवीतयुक्तैः पुरुषैरनुष्ठीयते । प्राचीनो दक्षिणो बाहुराधीयतेऽधस्तात्क्रियते यत्र तत्प्राचीनावीतम् । तच्च पितॄणां कर्माणि प्रशस्तम् । अत एव शिष्टाः प्राचीनावीतयुक्ताः पिण्डदानं कुर्वन्तीति । उपवीतस्य लक्षणं स्वाध्यायब्राह्मणे समाम्नातम्—' दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम् ' इति । तच्च देवानां कर्माणि प्रशस्तम् । अत एव शिष्टाः स्वाध्यायादिकं तथैवाऽऽचरन्ति इदानीं विधत्ते—

उप व्ययत इति । तत्तेनोपवीतेन देवलक्ष्ममेव देवचिन्हमेव कृतं भवति यागकर्तॄणामुपवीतं विधाय होतुः सामिधेन्याद्यनुवचनकाले स्थितिं विधत्ते—

तिष्ठन्नन्वाहेति । आसीनो नानुब्रूयात्किंतु तिष्ठन्नेव ब्रूयात् । तस्मात्तिष्ठन्मनुष्य आ समन्तादतिशयेन श्रुतं यथा भवति तथा वदितुं प्रभवति । तस्मात्तिष्ठन्ननुब्रूयात् । तदेवानूद्य प्रशंसति—

तिष्ठन्नन्वाहेति । आसनादुत्थितस्य प्रत्यासन्नः स्वर्गः । तस्मात्तस्याभिजित्यै संपद्यते । याज्याकाल उपवेशनं विधत्ते—

आसीनो यजतीति । यजति याज्यां पठेदित्यर्थः । आसीनस्य चलनाभावादत्र प्रतिष्ठा । अत्युच्चध्वानिमतिनीचध्वानिं चापवदन्मध्यमध्वानिं विधत्ते—

यत्क्रौञ्चमन्वाहेति । यथा क्रौञ्चाख्यः पक्षिविशेष उच्चध्वानिं करोति तत्सदृशे सत्यासुरं भवेत् । मनुष्यास्तूपविश्य मन्द्रस्वरेण संभाषन्ते । अतः सोऽपि वर्ज्यः । मध्यमध्वनेर्देवप्रियत्वात्तथैवानुवचनं कार्यम् । अपरं कंचिद्विशेषं विधत्ते—

विद्वा२ंसो वा इति । मूढः कश्चिद्धोता वेदेर्बहिरेव पादद्वयमवस्थाप्यानुब्रूते, तस्य पादद्वयस्थापनान्मार्गः संकीर्णो भवति । अपरस्तु मूढः पादद्वयं वेदिमध्य एव प्रक्षिप्यानब्रूते । स तु मार्गं न जानाति, तदिदं दोषद्वयं विद्वांसः केचित्कुशलाः पुरा यज्ञेषु होतारोऽभूवन् ' ते च दक्षिणं पादं वहिर्न प्रक्षिपन्ति । तेन तेषामध्वानो विस्तीर्णत्वेन धृवा भवन्ति । वामपादमन्तर्न प्रक्षिपन्ति, किंतु बहिरेव स्थापयन्ति । तेन बहिःस्थापनेन पन्थानस्ताग्विदुषः पुरुषान्नैव समरुक्षन्संरोहं न कृतवन्तः । अन्यो मार्गोऽन्यत्र च गच्छन्तीत्येतादृशो मार्गभ्रंशो मार्गकृतः संरोहः सोऽप्येषां नाऽऽसीत् । तस्मात्पुरातनविद्वांस इवायमपि दक्षिणं पादं वेदेरन्तः प्रक्षिपेत् । वामपादं बहिः प्रक्षिपेत् । ततोऽनुब्रूयात् । एवं च सत्यध्वनां विस्तीर्णत्वेन धारणं भवति । पथिविषये संमोहश्च न भवति ।

परस्परविलक्षणं पादविन्यासं बहुधा प्रशंसति–

अथो भूतमिति । चतुर्ष्वप्येतेषु प्रथमेनान्तःपादप्रशंसा द्वितीयेन बहिष्पादप्रशंसेति द्रष्टव्यम् ।

तदेवं सामिधेनीषु विशेषनियमा हौत्राः समापिताः । अथाऽऽध्वर्यवस्त्वाघारं विधत्ते–

[ देवा वा इति । पूर्वं देवाः सामिधेनीरनूच्य तत्रत्येषु नियमविशेषेषु व्यापृतमनस्काः सन्त उपरितनयज्ञगतं कर्तव्यविशेषं किंचिदपि नैव स्मृतवन्तः । ततः प्रजापतिर्मन्त्रं कमप्यनुच्चार्य तूष्णीमेव ऋजुमाघारमनुष्ठितवान् । तावता कालेन देवाः सामिधेनीषु विक्षिप्तं चित्तं समाधायैकाग्रेण मनसा यज्ञगतकर्तव्यविशेषमनुस्मृतवन्तः । अतोऽत्रापि तूष्णीमनुष्ठितः प्रथमाघारोऽनन्तरभाविनो यज्ञकर्तव्यस्यानुस्मरणाय भवति । यद्यपि पौरोडाशिककाण्डे वेदेनोपयत्य स्रुवेण प्राजापत्यमाघारमाघारयतीति अत्रमाघारो विहितः, तथाऽपि तूष्णींभावादयो गुणविशेषा न विहिता इति नास्ति पुनरुक्तिः । तमेवाऽऽघारं प्रशंसति–

अथो सामिधेनीरिति । न केवलमनन्तरभावियज्ञकर्तव्यप्रतिभाननाघारस्य

[ सामिधेनीषु होतृनियमविशेषाध्वर्य्वाधारविशेषयोर भिधानम् ]

प्रयोजनं, किंतु वन्हौ प्रक्षिप्तानां सामिधेनीकाष्ठानामभ्यञ्जनमप्येकं प्रयोजनम् । एतद्वेदनं प्रशंसति -

अलूक्षो भवतीति । उक्ताभ्यञ्जनाभिज्ञः स्वयमरूक्षः पारुष्यरहितः स्नेहोपेतो भवति । आवारमेव पुनः प्रशंसति-

अथो तर्पयतीति । किंचानेनाऽऽधारेणैनाः सामिधेन्यभिमानिदेवतास्तर्पयति । एतदीयतृप्तिवेदनं प्रशंसति-

तृप्यतीति । यदुक्तं सूत्रकारेण-‘ स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्याऽऽसीन उत्तरं परिधिमन्ववहृत्य प्रजापतिं मनसा ध्यायन्दक्षिणाप्राञ्चमृजुꣳ संततं ज्योतिष्मत्याधारयन्सर्वाणीध्मकाष्ठानि सꣳस्पर्शयति ’ इति । वेदेनोपयम्य स्रुवस्याधस्ताद्वेदं धारयित्वोत्तरं परिधिसंधिमन्ववहृत्य वायवीये संधौ स्रुवद्युक्तहस्तमन्तः प्रसार्य ज्योतिष्मति वन्हौ घृतं क्षारयंस्तद्घृतं सर्वसामिधेनीकाष्ठस्पृष्टं कुर्यादित्यर्थः । तत्र मनसा प्रजापतेर्ध्यानं वदेत-द्विधत्ते-

यदेकयेति । यद्येकामृचं पठित्वाऽऽधारयेत्तदानीमेकैव सामिधेनी तृप्ता भवेत् । द्वाभ्यामृग्भ्यां द्वे एव तृप्ते भवेताम् । त्रिप्रभृतिभिर्ऋग्भिराधारं यदि कुर्यात्तेनायमाधारः सर्वाणि कर्माण्यतिरिक्तवान्भवति । एकस्य हि कर्मण एकैव ऋक्प्राप्ता । तथा सति बहुभिरनुष्ठानमतिरेकः । तस्य सर्वस्य दोषस्य परिहाराय मनसैवाऽऽधारयेन्मनसोऽप्रतिहतगतित्वात् । यद्वागादिभिर्न प्राप्तं तत्सर्वं मनसा प्राप्तुं शक्यते ।

दक्षिणाप्राञ्चमित्युदाहृते सूत्रे वायवीं दिशमारभ्याऽऽग्नेय्यां समापनमुक्तम् । स एव सूत्रकार आधारयोः पुनरपि द्वे पक्षान्तरे दर्शितवान्-‘ ऋजू प्राञ्चौ होतव्यौ तिर्यञ्चौ वा ’ इति । तत्र तिर्यक्पक्षं विधत्ते-

तिर्यञ्चमेति । दक्षिणां दिशमारभ्योत्तरस्यां समापनं तिर्यक्त्वम् । प्रतीचीमारभ्य प्राच्यां समापने सत्येकस्या एव समिध उपरि घृतं पतेत् । तथा सति समिदन्तराणामस्पर्शाच्छम्बट्कारो वैयर्थ्यं भवेत् । तस्मादच्छम्बट्कारं यथा

[ सामिधेनीषु हौतृनियमविशेषाध्वर्य्वाघारविशेषयोरभिधानम् )

भवति तथा होतव्यम् । तिर्यक्त्वे सति सर्वसमित्संस्पर्शाद्वैयर्थ्यं न भवति ।

मनसाऽऽघारयतीति यद्विहितं तदेव पुनः प्रशंसति—

**वाक्च मनश्चेति** । आर्तिरतिशयस्तामिच्छेताम् । सैवाऽऽर्तिः स्पष्टी क्रियते—' अहं देवेभ्यो हव्यं वहामि ' इति वाक्येन । ततो वाक्च मनश्चेत्येतौ हविर्वहननिर्णयाय प्रश्नं कर्तुं प्रजापतिं प्राप्नुताम् । स प्रजापतिर्वाचमब्रवीत्-हे वाक्त्वं मनसो दूतीरेवासि दासीभूतेवासि न तु स्वतन्त्रा । तत्कथमित्युच्यते-यस्माल्लोके पुरुषो यत्पूर्वं मनसा ध्यायति तत्पश्चाद्वाचा वदति तस्माद्वाचो दूतीत्वमेवेति । अनन्तरं क्रुद्धा वागब्रवीत्—हे प्रजापते यद्यहं दूती तर्हि तुभ्यं कोऽपि वाचा मा जुहोत्विति । तस्मादाघारं प्रजापतये मनसा जुह्वति । यथा मनः संकल्पेन कार्यं साधयति तथा प्रजापतिरपि । अतः सादृश्यान्मनसा होम प्रजापतेराप्त्यै भवति ।

यदुक्तं सूत्रकारेण " इध्मसंनहनैः सह स्फ्यैश्चैते स्फ्यैर्वाऽऽग्नीध्रोऽनुपरिक्रामन्परिधीन्यथापरिधि तमन्वग्रं त्रिस्त्रिः संमृज्य " इति । तदेतत्संमार्जनं स्फ्येन सहितैरिध्मसंनहनदर्भैः कर्तव्यमिति विधत्ते—

**परिधीन्त्संमार्ष्टीति** । क्रमेणैकैकस्य परिधेः संमार्जनावृत्तिं विधत्ते-

**त्रिर्मध्यममिति** । प्राणापानव्याना इति त्रित्वं, लोकत्रित्वं प्रसिद्धं, स्वर्गलोकयमलोकब्रह्मलोकविषयास्त्रयः पन्थानः । तत्र यमलोकविषयस्य परिहारो जय इतरयोः प्राप्तिर्जयः । त्रित्वसाम्यात्तज्जय इति स्तूयते ।

यदुक्तं सूत्रकारेण—" वेदेनाग्निं त्रिरुपवाजय " इति । तदेतद्विधत्ते-

**त्रिरुप वाजयतीति** । देवलोकानां त्रित्वं तदभिजयश्च मार्गत्रित्वतज्जयवद्व्याख्येयम् ।

त्रिषु परिधिषु वह्नौ च येयं प्रत्येकं त्रिः क्रियावृत्तिस्तामेकीकृत्य प्रशंसति-

[ सामिधेनीषु होतृनियमविशेषाद्ध्वर्य्वाधारविशेषयोरभिधानम् ]

**द्वादश समिति ।** न केवलं संवत्सरदेवताया: प्रीति: किंतु तत्संवत्सरं यजमानार्थं कर्मानुष्ठानकालत्वेन संपादयति । तच्च स्वर्गलोकप्राप्त्यै भवति ।

पूर्वत्र विहितं तिर्यञ्चमाघारमनूद्य प्रशंसति—

**आघारमिति ।** प्राङ्मुखेन यजमानेन दृश्यमान: स्वर्गो लोको दक्षिणोत्तरायामेन प्रतीयमानत्वात्तिर इव भवति । अतस्तिर्यगाघारेण यजमानाय स्वर्गमुत्पादितवान्भवति । अथवा स्रुच्याघारस्य द्वितीयस्यायं विधिर्द्रष्टव्य: ।

आघारे गुणान्तरद्वयं विधत्ते—

**ऋजुमिति ।** दक्षिणां दिशामारभ्योत्तरदिगवसानपर्यन्तमाघारधाराया वक्रत्वं यथा न भवति यथा च विच्छेदो न भवति तथा कुर्यात् । प्राणवायुश्च हृदयमारभ्य मुखे नि:सरन्वामदक्षिणपार्श्वयोरप्रवेशेन ऋजुरेव भवति संततश्च भवति । अत: प्राणस्यान्नस्य च संतत्यै संपद्यते । किंच सांतत्येन रक्षसामवकाशाभावादप्रहतिर्भवति । ऋजुत्वस्य नित्यप्रयोगाङ्गत्वात्काम्यत्वेन वक्रत्वं विधत्ते—

**यं कामयेतेति ।** यं यजमानमुद्दिश्य मरणं कामयेत तस्य जिह्मं वक्रं यथा भवति तथाऽऽघारयेत् । तेन वक्रत्वेनास्माद्यजमानात्प्राणं वामादिपार्श्वनाडीषु प्रविश्य वक्रत्वं प्रापयति । तेन श्वासोपरोधेन तदानीमेवासौ म्रियते ।

आघारशेषेण ध्रुवायामञ्जनं विधत्ते—

**शिरो वा इति ।** स्वात्मस्थानीयायां ध्रुवायां यज्ञशिर:स्थानीयस्याऽऽघारस्य प्रक्षेपे सति स्वास्मिन्नेव यज्ञशिर: स्थापितवान्भवति । ननु

[ सामिधेनीषु होतृनियमविशेषाध्वर्य्वाधारविशेषयोराभिधानम् ]

परिधिसंमार्जनादयः पौरोडाशिककाण्डेऽपि विहिताः । बाढम् । तत्र ह्यनुक्रमेण मन्त्राणां व्याख्यायमानत्वाद्भुवनमित्यादिमन्त्रव्याख्यानावसरे युक्ता एतद्विधयः । इह तु तदनुवादेन प्रत्यभिज्ञाप्य तेष्वृजुत्वादयो गुणा विधीयन्ते । ततो नास्ति पुनरुक्तदोषः । अत एवोक्तानुवादकत्वादनुब्राह्मणमेतादिति संप्रदायविदः ।

यदुक्तं सूत्रकारेण " ऊर्ध्वस्तिष्ठन्होतारं वृणीतेऽग्निर्देवो होता देवान्यक्षद्विद्वाꣳश्चिकित्विन्मनुष्वद्भरतवदमुवदमुवदिति यथार्षेयो यजमानः" । इति " इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता " इति च । अस्यायमर्थः- यजमानस्य यादृशान्यार्षेयाणि तादृशानि होतारं प्रत्यमुवदमुवदिति तत्तन्नामपुरःसरं प्रयोक्तव्यानि । तदिदमध्वर्युकर्तृकं होतृविषयं वरणम् । सामिधेनीप्रस्तावे त्वार्षेयं वृणीत इति होतृकर्तृकमग्निविषयं वरणमुक्तम् । तयोरयं विशेषः । अर्वाञ्चमारभ्येत ऊर्ध्वानुत्तरोत्तरानध्वर्युर्वृणीते । होता तूत्तममारभ्याधस्तनान्वृणीते । तद्यथा--भार्गवच्यावनाप्नवानौर्वजामदग्न्येत्येवं होतृकर्तृकं पूर्वमुदाहृतम् । अध्वर्युकर्तृके तु मनुष्वद्भरतवदित्यन्तं मन्त्रं पठित्वा जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति प्रयोक्तव्यामिति । तदिदमध्वर्युकर्तृकं होतृविषयं वरणं विधत्ते–

अग्निर्देवानामिति । द्विविधो ह्यग्निर्मानुषो दैव्यश्चेति । भूलोके वर्तमानो होमसाधनभूतो मानुषोऽग्निः स च देवानां हविर्वहनेन तदीयो दूत आसीत् । दिवि वर्तमानो दैव्यः । स चान्यत्रापि श्रूयते--' दिवि नाको नामाग्निः । तस्य विप्रुषो भागधेयम् ' इति । स चासुराणां हितमाचरंस्तदीयो दूत आसीत् । तावुभावावयोः कस्य दौत्यमुचितमिति प्रश्नमभिलक्ष्य प्रजापतिं प्राप्नुताम् । तत्र

[ सामिधेनीषु होतृनियमविशेषाध्वर्य्वाधारविशेषयोरभिधानम् ]

योऽयं मानुषोऽग्निः स ब्राह्मणः। ब्रह्माणि वेदे विहितं कर्म साधयितुं प्रवृत्तत्वात्। दैव्यस्त्वसुराणां कर्म साधयितुं प्रवृत्तत्वादासुर इत्युच्यते न ब्राह्मण इति। तयोर्मध्ये ब्राह्मणमाग्निं प्रति प्रजापतिरब्रवीत् हे मानुषाग्ने त्वमेव दूत्यमर्हसि। तस्मात्त्वमेव यागे वक्तव्यमेतत्सर्वं ब्रूहीति। किं तत्सर्वमिति तदुच्यते--होतारं प्रत्यध्वर्युराश्रावयेति प्रयुङ्क्ते तस्य प्रयोगस्याभिप्रायः कथ्यते--हे देवा इदं यजमानसंबन्धि हविर्दानं शृणुतेत्येतमर्थमेव होतर्ब्रूहीत्यभिप्रेत्य तदाश्रवणवाक्यं हे होतस्त्वां प्रत्यध्वर्युरब्रवीत्। तस्मात्त्वमेव याज्यापाठमुखेन देवानां श्रवणं यथा भवति तथा हौत्रमेतत्सर्वं त्वमेव ब्रूहीति। आसुरं प्रत्यध्वर्युणाऽऽश्रावयेत्यनुक्तत्वादसौ याज्यादिकं मा ब्रवीत्यभिप्रायः। यस्मात्प्रजापतिर्ब्राह्मणाग्निवरणं कृतवांस्तस्माद्देवा उत्कृष्टा अभवन्। पराभूता असुराः। प्रशंसति--

यद्ब्राह्मणश्चेति। यदि लोके ब्राह्मणाब्राह्मणौ विवदमानावहमेवाधिक इति अधिविषयं प्रश्नं कर्तुं कंचिदभिज्ञं प्रत्यागच्छेतां सोऽभिज्ञो ब्राह्मणस्यैवाऽऽधिक्यं ब्रूयात्तेन वक्तुः स्वस्यैवाऽऽधिक्यं संपादितं भवति। ब्राह्मणस्य पराभववचने स्वस्यैव पराभव उक्तो भवति। तस्मात्कदाचिदपि ब्राह्मणः पराभवविषयो न कर्तव्यः। सोऽयं प्रासङ्गिकः पुरुषार्थो विधिर्द्रष्टव्यः

अत्र मीमांसा।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्--

" निवीतं तु मनुष्याणां विधिर्वैषोऽर्थवादकः।
अपूर्वत्वात्प्रकरणान्नुः क्रतोर्वा विधीयते।
प्राप्तं निवीतं मर्त्येषु प्रायेणैतस्य दर्शनात्।
उपवीतविधावेकवाक्यत्वादर्थवादता "॥

[ सामिधेनीषु होतृनियमविशेषाध्वर्य्वाचारविशेषयोरभिधानम् ]

दर्शपूर्णमासयोः श्रूयते—“ निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते ” इति । तत्र निवीतस्य पूर्वं मानान्तरेणाप्राप्तत्वाद्विधेयत्वमभ्युपेतव्यम् । तच्च निवीतं मनुष्याणामिति षष्ठ्या पुरुषार्थत्वेन विधीयत इत्येकः पूर्वपक्षः । अस्मिन्पक्षे मनुष्यसंबन्धो द्विविधः—सुवर्णसाधारणवत्सर्वपुरुषार्थ इत्येक प्रकारः । उपवीतप्राचीनावीतयोः क्रतुप्रवेशरहितयोः स्वतन्त्रदैविकपैतृककर्मणोरपि दर्शनात्तत्साहचर्येण स्वतन्त्र आचार्यातिथ्यादिमनुष्यविषये कर्मणि निवीतमित्यपरः प्रकारः प्रकरणबलाद्यागधर्म इति द्वितीयः पूर्वपक्षः । अस्मिन्पक्षे मनुष्यग्रहणं कर्तृसंबन्धानुवादः । षष्ठीश्रुतिप्रकरणयोरविरोधादुभयावलम्बनेन क्रतुसंबन्धिमनुष्यधर्म इति पक्षान्तरमुदेति । तच्च द्विविधं, लोहितोष्णीषादिवद्दृत्विग्धर्म इत्येकः प्रकारः । क्रतावेव यन्मनुष्यप्रधानं कर्मान्वाहार्यदानादि तद्धर्मत्वे सति उपवीतप्राचीनावीतसाहचर्यमप्यनुगृह्यत इत्यपरः प्रकारः । सर्वथा निवीतं नार्थवाद इत्येवं प्राप्ते ब्रूमः—अत्र प्रतीयमानं निवीतादिकं वासोविषयं न तु त्रिवृत्सूत्रविषयम् । अजिनं वासो वा दक्षिणत उपवीयेत्यनेन सदृशत्वात् । वस्त्रस्य च निवीतं सौकर्याय प्राप्तम् । अत्र प्राचीनावीतोपवीतयोरवश्यमेकस्मिन्पार्श्वे वस्त्रमधः पतेत् । अतः प्राप्तेऽर्थे मनुष्याणामिति षष्ठीश्रुतिर्न विधायिका । न च प्रकरणात्क्रत्वङ्गत्वेन विधिः । वाक्यभेदप्रसङ्गात् । उपवीतं तावद्विधीयते । अन्यथा देवलक्ष्ममेव तत्कुरुत इति प्रशंसावैयर्थ्यापत्तेः । तस्मिंश्चोपवीतविधावर्थवादत्वेन निवीतप्राचीनावीतयोरेकवाक्यत्वसंभवे पृथग्विधानमयुक्तम् । निवीतप्राचीनावीते मनुष्यपितृविषयत्वाद्दैविके कर्मण्ययोग्ये उपवीतं तु योग्यमिति व्यतिरेकमुखेन (ण ) स्तावकं निवीतम् । तस्मादर्थवादः । उपव्ययत इत्यस्य तु विधित्वं प्रथमकाण्डस्याऽऽद्यानुवाके चिन्तितम् ।

तृतीयाध्यायस्यैव प्रथमपादे चिन्तितम्—

“ उपव्ययत इत्यस्य सामिधेन्यङ्गताऽथवा ।
दर्शाङ्गता प्रक्रियैषाऽन्तराऽतोऽस्त्विहाग्रिमः ॥

( सामिधेनीषु होतृनियमविशेषाध्वर्य्वाधारविशेषयोरभिधानम् )

लिङ्गादग्नेरङ्गभूतैर्निवित्संज्ञकमन्त्रकैः ।

विच्छेदे सति दर्शाङ्गं महाप्रकरणोक्तितः ” ॥

दर्शपूर्णमासप्रकरणे विश्वरूपो वै त्वाष्ट्र इत्यस्मिन्प्रपाठके सप्तमाष्टमयोरनुवाकयोः सामिधेनीब्राह्मणमाम्नातम् । नवमे निवित्संज्ञकानामग्ने महाँ असि ब्राह्मण भारतेत्यादीनां मन्त्राणां ब्राह्मणम् । दशमे काम्याः सामिधेनीपक्षाः । एकादशे तूपवीतमेवं विहितम्–“ निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते ” इति । तत्र पूर्वन्यायेन सामिधेनीप्रकरणास्यावान्तरस्यं स्वीकारात्सामिधेन्यङ्गत्वमुपवीतस्येति चेन्न । निविद्ब्राह्मणेन सामिधेनीप्रकरणस्य विच्छिन्नत्वात् । न च निविदामपि सामिधेन्यङ्गतया तत्प्रकरणपाठादविच्छेदकत्वमिति वाच्यम् । लिङ्गेन निविदामग्न्यङ्गत्वावगतत्वात् । आहुत्यधिकरणभूतमग्निं संबोध्य महाꣳ असीत्याद्याभिर्निविद्भिर्वैरग्नेरुत्साहजननाय तद्गुणा आवेद्यन्ते । अत एव निर्वचनमेवं श्रूयते–निविद्भिर्न्यवेदयन् । तन्निविदां निवित्त्वम् ” इति । ननु सम्यगिध्यतेऽग्निर्याभिऋग्भिस्ताः सामिधेन्य इति व्युत्पत्त्या ता अप्यत्र ज्वलनद्वारेणाग्न्यर्था एवेति चेत् । भवतु नाम । नैतावता परस्परमङ्गाङ्गिभावः । ननु विच्छिद्यतां सामिधेनीप्रकरणं, निवित्प्रकरणेनोपवीतस्य निविदङ्गत्वं स्यादिति चेन्न । पूर्वोत्तरानुवाकयोर्निविदामश्रवणेन प्रकरणाभावात् । संनिधिना तदङ्गत्वमिति चेन्न । काम्यसामिधेनीभिर्व्यवहितत्वात् । न च काम्यसामिधेन्यङ्गता शङ्कनीया । संनिधितः प्रकरणस्य प्रबलत्वात् । तस्मादिह प्रयाजन्यायाभावान्महाप्रकरणेन दर्शपूर्णमासाङ्गमुपवीतम् । तत्रैव चतुर्थपादे चिन्तितम्–

सर्वार्थमुत दर्शार्थमुपव्ययत इत्यदः ।

सर्वार्थमग्निहोत्रे स्यादुपवीतीति लिङ्गतः ॥

दर्शाद्यर्थं प्रकरणाल्लिङ्गं स्यात्सिद्धिरन्यथा ।

दोहं मृताग्निहोत्रस्य स्तोतुमेवदनूदितम् ” ॥

( सामिधेनीषु होतृनियमविशेषाध्वर्य्याधारविशेषयोरभिधानम् )

" यज्ञोपवीती हि देवेभ्यो दोहयति " इत्येवमग्निहोत्रे यज्ञोपवीतस्य सिद्धवदनुवादेन लिङ्गेन सर्वकर्मार्थमुपवीतमिति चेन्न । लिङ्गस्यान्यथोपपत्तेः । मृताग्निहोत्रं तस्मिन्दिनेऽन्येन हूयते । तत्र प्राचीनावीती दोहयेदिति विधाय तस्य स्तुतये यज्ञोपवीतीत्याद्यनूदितम् । अतो लिङ्गाभासेन बाधासंभवात्प्रकरणाद्दर्शपूर्णमासाङ्गमुपवीतम् । द्वादशाध्यायस्य तृतीयपादे चिन्तितम्—

" ऋजुत्वाद्य आघारे विकल्पन्ते न वाऽग्रिमः ।

एकार्थत्वाददृष्टार्थभेदात्संभवतोऽन्तिमः " ॥

दर्शपूर्णमासयोराम्नायते— ऋजुमाघारयति, संततमाघारयति, आघारमाघारयति ' इति । तेषामृजुत्वादीनामाघारोपकारद्वारा कार्यस्यैकत्वाद्विकल्प इति चेन्न । दृष्टद्वारभेदाभावेऽप्यदृष्टाद्वारभेदात्सहानुष्ठानसंभवाच्च न विकल्पः ।

तत्रैवान्यच्चिन्तितम् –

' आघारे मन्त्रसाहित्यं धारा वा संतताऽग्रिमः ।

कर्मैकत्वान्नाऽऽज्यधारानैरन्तर्यस्य संभवात् ' ॥

संततमाघारयतीत्यत्र पूर्ववदाहुतिनैरन्तर्यं न संभवति । आहुतेरेकत्वात् अतो मन्त्रकर्मसाहित्यस्यैव संततशब्दार्थत्वान्मन्त्रादौ कर्मोपक्रम इति चेन्नैवम् । धा ( घा ) र्यमाणाज्यबिन्दुनैरन्तर्यस्य संततशब्दार्थत्वसंभवात् । न च प्रयाजाद्याहुतिष्वपि नैरन्तर्यमस्तीति शङ्कनीयम् । तत्र विच्छिद्य विच्छिद्य बिन्दुपातेऽपि कर्मवैकल्याभावात् । अत्र तु न तथेति वैषम्यम् । तथा सत्याघाराय यदाज्यं जुह्वा गृहीतं तत्सर्वं शनैरविच्छेदेनाऽऽहवनीये पातयेदिति संततशब्दार्थः । यदि मन्त्रकर्मणोः सहोपक्रमः स्यात्तदानीमनेन मन्त्रेणेति तृतीयाश्रुत्युक्तं पूर्वकालवर्तित्वलक्षणं मन्त्रस्य करणत्वं हीयेत । तस्मात्पूर्ववन्मन्त्रान्ते कर्मसंनिपातः ॥

( सामिधेनीषु होतृनियमविशेषाध्वर्य्वाघारविशेषयोरभिधानम् )

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय
तैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठकेऽ-
एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ द्वितीयाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः ) ।

आयुष्ट आयुर्दा अग्न आ प्यायस्व सं तेऽवते हेड उदुत्तम प्र णो देव्या नो दिवोऽग्नाविष्णू अग्नाविष्णू इमं मे वरुण तत्त्वा याम्युदुत्यं चित्रम् । अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः । तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः । सम् ( १ ) अन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति । तमू शुचिꣳ शुचयो दीदिवाꣳसमपां नपातं परि तस्थुरापः । तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः । स शुक्रेण शिक्वना रेवदग्निर्दीदायानिध्मो घृतनिर्णिगप्सु । इन्द्रावरुणयोरहꣳ सम्राजोरव आ वृणे । ता नो मृडात ईदृशे । इन्द्रावरुणा युवमध्वराय नः [ २ ] विशे जनाय महि शर्म यच्छतम् । दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः । आ नो मित्रावरुणा प्र बाहवा । त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽव यासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्र

मुमुग्ध्यस्मत् । स त्वं नो अग्नेऽवमो भवो
ती नेदिष्ठो अस्या उषसो व्युष्टौ । अव
यक्ष्व नो वरुणम् ( ३ ) रराणो वीहि
मृडीकꣳ सुहवो न एधि । प्रप्रायमग्नि-
र्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं पृतनासु तस्थौ दीदाय
दैव्यो अतिथिः शिवो नः । प्र ते यक्षि प्र
त इयर्मि मन्म भुवो यथा वन्द्यो नो हवे-
षु । धन्वन्निव प्रपा असि त्वमग्न इयक्षवे
पूरवे प्रत्न राजन् । ( ४ ) वि पाजसा वि
ज्योतिषा । स त्वमग्ने प्रतीकेन प्रत्योष
यातुधान्यः । उरुक्षयेषु दीद्यत् । तꣳ सुप्र-
तीकꣳ सुदृशꣳ स्वञ्चमविद्वाꣳसो विदुष्ट-
रꣳ सपेम । स यक्षद्विश्वा वयुनानि विद्वा-
न्प्र हव्यमग्निरमृतेषु वोचत् । अꣳहोमुचे
विवेष यन्मा वि न इन्द्रेन्द्र क्षत्रमिन्द्रिया-
णि शतक्रतोऽनु ते दायि ॥ ५ ॥

( यह्वीः सयध्वराय नो वरुणꣳ राजꣳश्चतुश्चत्वारिꣳशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

[ काम्येष्टियाज्यानुवाक्याभिधानम् ]

विश्वरूपस्त्वष्टेन्द्रं वृत्रं ब्रह्मवादिनः स त्वै नासोमयाज्येष वै देवरथो देवा वै नर्चि नायज्ञोऽग्ने महान्त्रीन्निवीतमायष्टे द्वादश ॥ १२ ॥

विश्वरूपो नैनꣳ शीतरूरावद्य वसु पूर्वेद्युर्वाजा इत्यग्ने महान्निवीतमन्या यन्ति चतुःसप्ततिः ॥ ७४ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमप्रपाठकः ॥ ५ ॥

---

( अथ द्वितीयकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः ) ।

होतुर्नियम आघारश्लोकमेकादशे द्वयम् ।

अथ द्वादशे काम्येष्टियाज्यानुवाक्या उच्यन्ते ।

अतीते तृतीयप्रपाठके इदमाम्नातम्-" यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालꣳ सौम्यं चरुं वारुणं दशकपालꣳ सारस्वतं चरुमाग्नावैष्णवमेकादशकपालम् " इति । तथा ' यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाञ्चतुष्कपालान्निर्वपेत् ' इति । ' यद्यपरं प्रतिग्राही स्यात्सौर्यमेककपालमनुनिर्वपेत् ' इति च । एतेषु सप्तसु हविःषु क्रमेण याज्यानुवाक्याप्रतीकानि दर्शयति-

आयुष्ट इति । तत्राऽऽग्नेयस्याऽऽयुष्टे विश्वतोऽदधदिति पुरोनुवाक्या । आयुर्दा अग्ने हविषो जुषाण इति याज्या । तदुभयं त्वमग्ने रुद्र इत्यनुवाके व्याख्यातम् । सौम्यस्य त्वा प्यायस्व समेतु त इति पुरोनुवाक्या । सं ते पयाꣳसि समु यन्तु वाजा इति याज्या । एतदुभयं चतुर्थकाण्डे मा नो हिꣳसीदित्यनुवाके व्याख्यास्यते । वारुणदशकपालस्याव ते हेड इति पुरोनुवाक्या । उदुत्तमाभीति याज्या । एतच्चोभयं वैश्वानरो न इत्यनुवाके व्याख्यातम् । सारस्वतस्य प्र णो देवीत्यनुवाक्या । आ नो दिवो बृहत इति याज्या । आग्नावैष्णवस्याग्नाविष्णू

महि तद्वामिति पुरोनुवाक्या । अग्नाविष्णू महि धामेति याज्या । चतुष्टयम-प्येतत्प्रथमकाण्डस्याष्टमप्रपाठकस्यान्त्यानुवाके व्याख्यातम् । वारुणचतुष्कपाल-स्येमं मे वरुणेति पुरोनुवाक्या । तत्त्वा यामीति याज्या । एतच्चोभयमस्मिन्नेव काण्डे प्रथमप्रपाठकस्यान्त्यानुवाके व्याख्यातम् । सौर्यस्योदु त्यं जातवेदसमिति पुरोनुवाक्या । चित्रं देवानामिति याज्या । एतच्चोभयं पूर्वकाण्डस्य चतुर्थप्रपा-ठके व्याख्यातम् ।

अथापोनप्त्रीयं चरुं पुनरेत्य निर्वपेदित्यस्य पुरोनुवाक्यामाह—

**अपां नपादिति** । अपामुदकानां नपाद्विनाशयिता तथाविधनामकः क-श्चिद्देव उपस्थं स्वस्योपवेशनस्थानमास्थादातिष्ठति प्राप्नोमीत्यर्थः । कीदृशो देवः । जिह्मानामूर्ध्वं आवर्तरूपेण कुटिलगतीनामुदकानामुपरि वर्तमानः । विद्युतं वसानो मेघमण्डलमध्य उपविष्टत्वाद्विद्युदेव तस्याऽऽच्छादकं वस्त्रम् । आपश्च तं देवं परियन्ति परितो व्याप्य वर्तन्ते । कीदृश्य आपः । तस्य देवस्य ज्येष्ठं प्रशस्तं महिमानं माहात्म्यं वहन्तीर्धारयन्त्यः । बहुलवृष्ट्या स्वकीयस्य स्वामिनस्तस्य देवस्य माहात्म्यं ख्यापयन्त्य इत्यर्थः । हिरण्यवर्णा बहूनां विद्युतां मध्ये वर्तमान-त्वाद्धेमवर्णत्वम् । यह्वीर्महत्यः । तत्रैव याज्यामाह—

**समन्या इति** । अन्याः काश्चिदापः संयन्ति परस्परं संगताः प्रवाहरूपेण गच्छन्ति । ताभ्योऽन्याः काश्चिदुपयन्ति प्रवाहमन्तरेण * प्रविष्टा इव तिष्ठन्ति । ऊर्वो वडवाग्नेराधारः समुद्रः । स च वहन्तीषु स्थिरासु चाप्सु समानः । न तावदयं प्रवहन्तीनामपां प्रवेशेन वर्धते स्वयम् । नापि तासामभावे सति स्थिराभि-रद्भिः परिक्षीयते । तादृशं समुद्रं नद्यः पृणन्ति स्वप्रवेशेन प्रीणयन्ति । तमु शुचय आपः परितो व्याप्य तस्थुः स्थिताः । कीदृशं, शुचिं शोधयितारं दीदिवांसं व-डवाग्निजनकत्वेन दीप्यमानमपां नपातमविनाशयितारम् ।

तत्रैव विकल्पितां याज्यामाह—

**तमस्मेरा इति** । तमपां नपातमापः परियन्ति । कीदृशं तं युवानं सर्वदा यौवनोपेतम् । कीदृश्य आपः, अस्मेरा विडम्बनारूपेण स्मयरहिता अनुकूला इत्यर्थः । युवतयः सर्वदा यौवनोपेताः । मर्मृज्यमानास्तत्संयोगे शोध्यमानाः ।

* ख. पुस्तके 'उपरिष्टादिव' इति पाठान्तरम् ।

[ काम्येष्टियाज्यानुवाक्याभिधानम् ]

सोऽपां नपादग्निरनिध्मः काष्ठरहितोऽप्यप्सु दीदाय दीप्यते । कीदृशः, शुक्रेण शिक्वना युक्तः शुद्धेन प्रकाशेन युक्तः, रेवद्धनवान् , घृतनिर्णिग्विलापनेन घृतं निर्णेनेक्ति निःशेषेण शोधयतीति घृतनिर्णिक् ।

यो पाप्मना गृहीतः स्यात्तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेदित्यस्याः पुरोनुवाक्यामाह—

**इन्द्रावरुणयोरिति**। सम्राजोः सम्यग्दीप्यमानयोरिन्द्रावरुणयोरवो रक्षणमहमावृणे सर्वतः प्रार्थये । तौ चेन्द्रावरुणावीदृशे रक्षणे वृतौ नोऽस्मान्मृडातः सर्वदा सुखयताम् । तत्रैव याज्यामाह—

**इन्द्रावरुणेति** । हे इन्द्रावरुणौ युवं नोऽस्मभ्यं महि शर्म महत्सुखमापन्निवारणरूपं यच्छतम् । किमर्थम्, अध्वराय यागानुष्ठानाय विशे प्रजासमृद्धये जनाय परिवारकजनसिद्धये च । यः पाप्मा दुर्धिययज्युपाति अस्मदीयं दीर्घकालमाविधागमयोगमतिलङ्घ्य नोऽस्मान्वनुष्यति पीडयति । वयं तु युवयोरनुग्रहवशात्पृतनासु पापकृतासु पीडासु दूढ्यो दृढतरा अपीडिताः सन्तस्तं पाप्मानं जयेम ।

पञ्चमकाण्डे मैत्रावरुण्यामिक्षा विहिता—“ यथा वै हविः स्कन्दत्येवं वा एष स्कन्दति योऽग्निं चित्वा स्त्रियमुपैति मैत्रावरुण्याऽऽमिक्षया यजेत ” इति । तत्र याज्यानुवाक्ययोः प्रतीके दर्शयति—

**आ नो मित्रेति** । आ नो मित्रावरुणेति पुरोनुवाक्या । प्र बाहवेति याज्या । एतदुभयमग्नाविष्णू महि तद्वामित्यनुवाके व्याख्यातम् ।

पुनराधेयप्रकरण आम्नातम्—“ वीरहा वा एष देवानां योऽग्निमुद्वासयते यस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनुनिर्वपेत् ” इति । अत्र पुरोनुवाक्यामाह—

**त्वं नो अग्ने इति** । हेऽग्ने त्वं नोऽस्माकं मर्कि विद्वान्सन्वरुणस्य देवस्य हेडोऽस्मद्विषयं क्रोधमवयासिसीष्ठा अपनय । यजिष्ठो यष्टृतमोऽतिशयेन यागनिष्पादकः । वन्हितमोऽतिशयेन देवहविर्वोढा । शोशुचानोऽत्यन्तं दीप्यमानः । विश्वा द्वेषांसि सर्वान्विरोधिकृतान्द्वेषानस्मत्प्रमुमुग्ध्यस्मत्तः प्रमोचय ।

तत्रैव याज्यामाह—

**स त्वं न इति**। हेऽग्ने स त्वं नोऽस्माकमूत्या रक्षणेनावमो भव रक्षको भव। कीदृशस्त्वम्। अस्या उषसो व्युष्टौ नेदिष्ठोऽद्यतनस्योषःकालस्योपरितने प्रातः-कालेऽत्यन्तं प्रत्यासन्नो नोऽस्माकं वरुणं वरुणेन कृतमभीष्टनिवारकं पापादिकम-वयक्ष्व नाशय। रराणो रममाणः सन्मृडीकं सुखसाधनमस्मदीयं हविर्वीहि भक्षय। ततो योऽस्माकं सुहव एधि सुखेनाऽऽह्वातुं शक्यो भव।

'यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाश-मष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवते" इत्यत्र प्रवतोऽग्नेर्हविषः पुरो-नुवाक्यामाह—

**प्रप्रायमिति**। अयमग्निर्भरतस्य हविर्भरणवतो यजमानस्याऽऽह्वानं प्रप्रशृ-ण्वेऽतिप्रकर्षेण शृणोतु। यद्योऽग्निः सूर्यो न सूर्य इव भा भासमानः सन्बृहद्दोच-तेऽत्यन्तं दीप्यते। योऽग्निः पृतनासु सङ्ग्रामेषु पुरुं जयपूर्तिमभितस्थौ सर्वतः करोति सोऽग्निर्नोऽस्माकमतिथिर्दीदाय भवतु अतिथिरिवेह समागच्छतु। कीदृ-शोऽग्निः। दैव्यो देवेभ्यो हितः शिवः परममङ्गलभूतः। तत्रैव याज्यामाह—

**प्र ते यक्षीति**। हेऽग्ने ते त्वदर्थं प्रयक्षि प्रकर्षेण यजे ते त्वदीयं मन्म मननं मानसमनुग्रहविशेषं प्रकर्षेणेयर्मि व्याप्नोमि। नोऽस्माकं हवेषु यागेषु वन्द्यो नमस्कार्यो यथा भुवो येन प्रकारेण भवति तेन प्रकारेणानुग्रहमियर्मीति पूर्वत्रा-न्वयः। हेऽग्ने त्वमियक्षवे यष्टुमिच्छते पुरवे हविः पूरयित्रे यजमानाय प्रियं दातुं धन्वन्प्रपेवासि मरुभूमौ शीतलपानीयपूर्णशालिवासि। हे प्रत्न पुरातन, हे राज-न्दीप्यमान। एतद्रूपं वह्निविशेषणम्।

अथ विबाधवतोऽग्नेर्याज्यापुरोनुवाक्ये प्रतीकेन दर्शयति—

**वि पाजसेति**। वि पाजसा पृथुना शोशुचान इत्येषा पुरोनुवाक्या। सेयं चतुर्थकाण्डस्य प्रथमप्रपाठके व्याख्यास्यते। वि ज्योतिषा बृहतेति याज्या कृणुष्व पाज इत्यनुवाके व्याख्याता। अथ प्रतीकवतोऽग्नेर्हविषि पुरोनुवाक्या-माह—

**स त्वमग्न इति**। हेऽग्ने स त्वं प्रतीकेन कर्मप्रारम्भमात्रेण यातुधान्यो राक्ष-सजातीः सर्वाः प्रत्योष प्रत्येकं दह। कीदृशस्त्वम्, उरुक्षयेषु विस्तीर्णेषु याग-गृहेषु दीद्यद्दीप्यमानः। तत्रैव याज्यामाह—

[ काम्येष्टियाज्यानुवाक्याभिधानम् ]

तꣳ सुप्रतीकमिति । वयं तमग्निं सपेम समवेताः प्राप्ता भूयास्म । कीदृशमग्निं सुप्रतीकं शोभनोपक्रमम् , अस्मास्वनुग्रहस्तेन सुष्टूपक्रान्तं, सुदृशं शोभनकटाक्षेणास्मान्पश्यन्तं, स्वञ्चमस्मदीये कर्माणि सुष्ठ्वागच्छन्तं, विदुष्टरमतिशयेन भक्तचित्तवेदिनम् । यद्यपि वयमविद्वांसस्त्वदीयं महिमानं न जानीमस्तथाऽपि तं प्राप्तास्मः । सोऽग्निर्वक्षद्यष्टुमिच्छतां पुरुषाणां विश्वा वयुनानि सर्वानभिप्रायविशेषान्विद्वाञ्जानन्नवतिष्ठति । अतः सोऽग्निरस्मदीयं हव्यं प्रवोचत्प्रकर्षेण ब्रवीतु ।

अथ " यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावते " इत्येतेषु त्रिहविःषु याज्यापुरोनुवाक्ययोः प्रतीकानि दर्शयति—

अꣳहोमुच इति । अꣳहोमुचे प्र भरेमेत्येषा प्रथमस्य हविषः पुरोनुवाक्या । विवेष यन्मेति याज्या । वि न इन्द्र मृध इति द्वितीयस्य हविषः पुरोनुवाक्या । इन्द्र क्षममभि वाममिति याज्या । इन्द्रियाणि शतक्रतो, इति तृतीयस्य हविषः पुरोनुवाक्या । अनु तेदायि मह इत्येषा याज्या । तदेतत्षट्कं प्रथमकाण्डे षष्ठप्रपाठकेऽन्त्यानुवाके व्याख्यातम् । अत्र विनियोगसंग्रहः—

" ज्योगामयाविनो ह्यायुरायुर्दाऽग्नेयके तथा ।
आप्या सं ते च सौम्ये स्यादवोदुत्तेति वारुणे ॥
सारस्वते प्र णो ह्यानोऽग्नाऽग्नावैष्णवे भवेत् ।
इमं तत्त्वाऽश्वदानीष्टौ उदु चित्रं तु सौर्यके ॥
अपां न समपोनप्त्र इन्द्रावेत्यैन्द्रवारुणे ।
मैत्रावरुण आमिक्षायागे त्वा नः प्र वेति च ॥
पुनराधेयके त्वाग्निवारुणे त्वं न इत्युभे ।
प्रप्रेति प्रवदाग्नेये विद्वयं बाधसंयुते ॥
स त्वं प्रतीकसंयुक्ते अꣳ हवित्यैन्द्रयामके ।
वीन्द्रेति वैमृधे हीन्द्रियाऽनु ते त्विन्द्रियावते ।
मन्त्रा ह्यस्मिन्ननुवाके पञ्चत्रिंशदुदीरिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमः प्रपाठकः

॥ ५ ॥

---

(अथ द्वितीयाष्टके षष्ठः प्रपाठकः)।

(तत्र प्रथमोऽनुवाकः)।

हरिः ॐ ।

समिधो यजति वसन्तमेवर्तूनामव रुन्धे तनूनपातं यजति ग्रीष्ममेवाव रुन्ध इडो यजति वर्षा एवाव रुन्धे बर्हिर्यजति शरदमेवाव रुन्धे स्वाहाकारं यजति हेमन्तमेवाव रुन्धे तस्मात्स्वाहाकृता हेमन्पशवोऽव सीदन्ति समिधो यजत्युषस एव देवतानामव रुन्धे तनूनपातं यजति यज्ञमेवाव रुन्धे

[ प्रयाजविधिः ]

[ १ ] इडो यजति पशूनेवाव रुन्धे बर्हिर्यजति प्रजामेवाव रुन्धे समानयत उपभृतस्तेजो वा ऽऽज्यं प्रजा बर्हिः प्रजास्वेव तेजो दधाति स्वाहाकारं यजति वाचमेवाव रुन्धे दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे समिधो यजत्यस्मिन्नेव लोके प्रति तिष्ठति तनूनपातं यजति [ २ ] यज्ञ एवान्तरिक्षे प्रति तिष्ठतीडो यजति पशुष्वेव प्रति तिष्ठति बर्हिर्यजाति य एव देवयानाः पन्थानस्तेष्वेव प्रति तिष्ठति स्वाहाकारं यजति सुवर्ग एव लोके प्रति तिष्ठत्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठति देवासुरा एषु लोकेष्वस्पर्धन्त ते देवाः प्रयाजैरेभ्यो लोकेभ्यो ऽसुरान्प्राणुदन्त तत्प्रयाजानाम् ( ३ ) प्रयाजत्वं यस्यैवं विदुषः प्रयाजा इज्यन्त प्रैभ्यो लोकेभ्यो भ्रातृव्यान्नुदतेऽभिक्रामं जुहोत्यभिजित्यै यो वै प्रयाजानां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते समिधो बह्वीरिव यजति तनूनपातमेकमिव मिथुनं तदिडो बह्वीरिव यजति बर्हिरेकमिव मिथुनं तदेतद्वै प्रयाजानां मिथुनं य एवं वेद

[ प्रयाजविधिः ]

प्र ( ४ ) प्रजया पशुभिर्मिथुनैर्जायते देवानां वा अनिष्टा देवता आसन्नथासुरा यज्ञमजिघांसन्ते देवा गायत्रीं व्यौहन्पञ्चाक्षराणि प्राचीनानि त्रीणि प्रतीचीनानि ततो वर्म यज्ञायाभवद्वर्म यजमानाय यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै तस्माद्वरूथं पुरस्ताद्वर्षीयः पश्चाद्ध्रसीयो देवा वै पुरा रक्षोभ्यः [ ५ ] इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳस्थाप्यमपश्यन्तꣳ स्वाहाकारेण प्रयाजेषु समस्थापयन्वि वा एतद्यज्ञं छिन्दन्ति यत्स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति प्रयाजानिष्ट्वा हवीꣳष्यभि घारयति यज्ञस्य संतत्या अथो हविरेवाकरथो यथापूर्वमुपैति पिता वै प्रयाजाः प्रजाऽनूयाजा यत्प्रयाजानिष्ट्वा हवीꣳष्यभिघारयति पितैव तत्पुत्रेण साधारणम् [ ६ ] करुते तस्मादाहुर्यश्चैवं वेद यश्च न कथा पुत्रस्य केवलं कथा साधारणं पितुरित्यस्कन्नमेव तद्यत्प्रयाजेष्विष्टेषु स्कन्दति गायत्र्येव तेन गर्भं धत्ते सा प्रजां पशून्यजमानाय प्र जनयति [ ७ ] ॥

[ प्रयाजविधिः ]

( यज्ञमेवावं रुन्धे तनूनपातं यजति प्रयाजानामेव वेद प्र रक्षोभ्यः साधारणं पञ्चत्रिंशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ द्वितीयकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ) ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
हौत्रमाध्वर्यवं चाऽऽधारास्तं पञ्चम ईरितम् ।
प्रयाजाद्यवशिष्टं तु वक्ति षष्ठे प्रपाठके ॥

तत्र प्रथमानुवाके प्रयाजा विधातव्याः । तेषां मन्त्रास्तु मन्त्रकाण्डे पञ्चमानुवाक एवमाम्नाताः–'समिधो अग्न आज्यस्य वियन्तु । तनूनपादग्न आज्यस्य वेतु । इडा अग्न आज्यस्य वियन्तु । बर्हिरग्न आज्यस्य वेतु । स्वाहाऽग्निम् । स्वाहा सोमम् । स्वाहाऽग्निम् । स्वाहा प्रजापतिम् । स्वाहाऽग्नीषोमौ । स्वाहेन्द्राग्नी । स्वाहेन्द्रम् । स्वाहा महेन्द्रम् । स्वाहा देवाꣳ आज्यपान् । स्वाहाऽग्निꣳ होत्राज्जुषाणाः । अग्न आज्यस्य वियन्तु ।' ( ब्रा० का० ३ प्र० ५ अ० ५ ) इति ।

एयेषां मन्त्राणां विनियोगं बौधायनो दर्शयति–'समिधो अग्न आज्यस्य वियन्त्विति प्रथमं तनूनपादग्न आज्यस्य वेत्विति द्वितीयम्' इत्यादि ।

हेऽग्ने समिध्यमानास्तव मूर्तय आज्यस्य वियन्तु हूयमानमिदमाज्यमश्नन्तु । तनूं शरीरं न पातयति न नाशयति किंतु पालयतीति तनूनपात् । हेऽग्ने द्वितीया तनूनपात्तव मूर्तिराज्यं पिबतु । हेऽग्न इड ईड्याः स्तुत्यास्तव मूर्तय आज्यं पिबन्तु । बृहणाद्बर्हिः । हेऽग्ने फलं बृहयन्ती तव मूर्तिराज्यं पिबतु । अग्निं प्रथमाज्यभागदेवं प्रति स्वाहा हुतं भविष्यति । एवं द्वितीयाज्यभागदेवं प्रति स्वाहा हुतमस्त्विति भविष्यतीति क्रमेण द्रष्टव्यम् । आवाहननिगदे या देवताः क्रमेण निर्दिष्टास्ता एवास्मिन्स्वाहाकारनिगदेऽपि निर्दिश्यन्त इत्यवधेयम् ।

होत्रात् , होमनिमित्तं स्विष्टकरणार्थमित्यर्थः । हेऽग्न एते सर्वे देवाः प्रीयमाणा इदानीं त्वन्मुखेनाऽऽज्यं पिबन्तु ।

तैरेतैर्मन्त्रकाण्डोक्तैर्मन्त्रैः साध्यान्प्रयाजान्विधत्ते-**समिध इति** ।

अत्र समिदादिशब्दैर्यागविशेषनामान्युच्यन्ते । ऋतवो वै प्रयाजा इत्येवमृतुत्वेन स्तूयमानत्वात्तैः प्रयाजैः क्रमेण वसन्ताद्यवरोध उच्यते । यस्मात्स्वाहाकारयागेन( ण ) हेमन्तावरोधस्तस्माद्धेमन्हेमन्ते पशवोऽवसीदन्ति, द्विपादश्चतुष्पादश्च हिमेन पीड्यन्ते, तेन तत्र दृष्टान्तः स्वाहाकृता इति । स्वाहाकारेण प्रक्षिप्ताः समिधो यथा दाहेन पीड्यन्ते तद्वदित्यर्थः । तादृश उग्रोऽपि हेमन्तोऽस्याधीनो भवतीति यागस्तुतिः ।

पुनरपि विधानान्तरेण प्रशंसति-**समिधो यजतीति** ।

समिच्छब्देन समित्स्तुतिसूचनादुषसोऽवरोधः । तनूनपाच्छब्देनाविनाशसूचनात्कृत्स्नयज्ञावरोधः । इट्शब्देनेष्यमाणक्षीरादिसूचनात्पश्वरोधः । प्रजा वै बर्हिरिति श्रुत्यन्तराद्बर्हिर्यागेन( ण ) प्रजावरोधः ।

चतुर्थप्रयाजार्थमौपभृतस्याऽऽज्यस्य जुह्वामानयनं विधत्ते-

**समानयतीति** । उपभृतः सकाशाज्जुह्वामर्धमाज्यं सम्यगानयेत् । बर्हिर्यागस्य प्रजारूपत्वादाज्यस्य तेजस्त्वात्प्रजासु तेजः स्थापितं भवति ।

पञ्चमप्रयाजमवशिष्टं प्रशंसति-**स्वाहाकारमिति** ।

अस्मिन्प्रयाजे स्वाहाशब्दानामग्न्यादिशब्दानां च बहूनामुच्यमानत्वात्तेन वागवरोधः ।

पूर्वोक्तवसन्ताद्यवरोधाः पञ्चेदानीमुक्ता उषःकालाद्यवरोधाः पञ्चेति दशसंख्याद्वारा यागान्प्रशंसति ।

**दश समिति** । पुनरपि तत्तल्लोकप्रतिष्ठामुखेन प्रशंसति-

**समिधो यजतीति** । समिद्यागस्य प्राथम्यात्तेनास्मिन्प्रथमलोके प्रतिष्ठा । प्रच्युतो वा एषोऽस्माल्लोकादगतो देवलोकमित्युक्तत्वाद्दीक्षादिरूपो यज्ञो लोकद्वयवर्त्यन्तरिक्षरूपस्तस्मिन्नन्तरिक्षे द्वितीयत्वसाम्यात्तनूनपाद्यागेन प्रतिष्ठा । इडया

(प्रयाजविधिः)

गस्य पशुसंबन्धः पूर्वमेवोक्तः। बर्हिः शब्देन देवयानमार्गसाधनस्य यज्ञस्य सूचनात्तद्यागेन त्रिष्वपि पूर्वोक्तेषु देवयानमार्गेषु प्रतिष्ठा। स्वाहाकारयागस्योत्तमत्वात्तेन स्वर्गप्रतिष्ठा। भूलोकमारभ्य स्वर्गान्ता यथोक्ता एतावन्त एव देवानां पूज्यानामपेक्षिता लोकास्तेषु सर्वेषु यथाक्रममेवैतैः प्रतिष्ठितो भवति।

इदानीं नामनिर्वचनेन प्रशंसति—

देवासुरा इति। अस्माकमेवैते लोका भवेयुरित्युभयेषां परस्परं स्पर्धा। प्राणुदन्त विरोधिना यैर्यागैस्ते यागाः प्रयाजाः।

यदुक्तं सूत्रकारेण—'यं कामयेताभितरं वसीयान्स्यादित्यभिक्रामं तस्य जुहुयात्' इति आभितरमुत्तरोत्तरवृद्ध्येत्यर्थः। तदेतत्सूत्रोक्तमभिक्रामं विधत्ते—

अभिक्राममिति। अभिक्रम्याभिक्रम्यादूरे स्थित्वा प्रथमं हुत्वा पादं पुरतः प्रक्षिप्य द्वितीयं जुहुयात्। तदेतदभिक्रमणम्।

स्त्रीलिङ्गबहुवचननिर्देशं लिङ्गान्तरैकवचननिर्देशं च सह प्रशंसति—

यो वै प्रयाजानामिति। एकस्य पुरुषस्य बह्वयः स्त्रियो लोके भवन्ति, तत्साम्यादत्र मिथुनत्वोपचारः। मूर्तिबहुत्वेऽपि देवत्वैक्याद्बह्वीरिवेत्युपक्रमोक्तिः। कवचरूपत्वं सैन्यसादृश्यं च संपाद्य प्रशंसति—

देवानां वा इति। पुरा देवा यदा यज्ञं कुर्वन्ति तदानीमाज्यभागादिदेवता अनिष्टा आसन्। तत्तदिज्याया: प्रागेव तस्मिन्नवसरे समागत्यासुरा यज्ञं हनिष्याम इत्यैच्छन्। अतस्तदिज्यात्प्रतिबद्धास्तत्प्रतीकारत्वेन देवा अष्टाक्षरे गायत्रीपादे व्यूहद्वयं कृतवन्तः। तत्राक्षरपञ्चकस्य व्यूहो यज्ञानुष्ठानात्प्राचीनो रक्षकः। अक्षत्रयव्यूहः प्रतीचीनो रक्षकः। ततो व्यूहद्वयं यज्ञस्य कवचमाच्छादनायाभवत्। तथा यजमानस्यापि। अतः पञ्चाक्षररूपत्वेन पञ्च प्रयाजाः पूर्वमिज्यन्ते। त्र्यक्षररूपत्वेन त्रयोऽनूयाजाः पश्चादिज्यन्ते। तदुभयं कवचं यज्ञयजमानयोरुभयतो रक्षणम्। तेन रक्षणेन भ्रातृव्यस्याभिभूतिर्भवति। यस्मादत्र प्राचीनान्यक्षराणि बहूनि प्रतीचीनान्यल्पानि तस्माल्लोकेऽपि युद्धार्थं गच्छन्त्यां सेनायां पुरस्ताद्भूरूथं जनसंघः परकीयसैन्यस्य भयोत्पादनाय भूयान्निविष्णाद्यते। पृष्ठभागे त्वल्पीयान्

प्रयाजशेषेण हविर भिघारणं विधत्ते—

